तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः |
प्रत्युवाच महातेजा मारीचो राक्षसेश्वरम् ||३-३७-१॥

सुलभाः पुरुषा राजन् सततं प्रियवादिनः |
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ||३-३७-२॥

न नूनं बुध्यसे रामं महावीर्यगुणोन्नतम् |
अयुक्तचारश्चपलो महेन्द्रवरुणोपमम् || ३-३७-३॥

अपि स्वस्ति भवेत् तात सर्वेषामपि रक्षसाम् |
अपि रामो न सङ्क्रुद्धः कुर्याल्लोकानराक्षसान् || ३-३७-४॥

अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा |
अपि सीतानिमित्तञ्च न भवेद् व्यसनं महत् || ३-३७-५॥

अपि त्वामीश्वरं प्राप्य कामवृत्तं निरङ्कुशम् |
न विनश्येत् पुरी लङ्का त्वया सह सराक्षसा || ३-३७-६॥

त्वद्विधः कामवृत्तो हि दुःशीलः पापमन्त्रितः |
आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः || ३-३७-७॥

न च पित्रा परित्यक्तो नामर्यादः कथञ्चन |
न लुब्धो न च दुश्शीलो न च क्षत्रियपांसनः || ३-३७-८॥
न च धर्मगुणैर्हीनैः कौसल्यानन्दवर्धनः |
न च तीक्ष्णो हि भूतानां सर्वभूतहिते रतः || ३-३७-९॥

वञ्चितं पितरं दृष्ट्वा कैकेय्या सत्यवादिनम् |
करिष्यामीति धर्मात्मा ततः प्रव्रजितो वनम् || ३-३७-१०॥

कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च |
हित्वा राज्यं च भोगांश्च प्रविष्टो दण्डकावनम् || ३-३७-११॥

न रामः कर्कशस्तात नाविद्वान् नाजितेन्द्रियः |
अनृतं न श्रुतं चैव नैव त्वं वक्तुमर्हसि || ३-३७-१२॥

रामो विग्रहवान् धर्मः साधुः सत्यपराक्रमः |
राजा सर्वस्य लोकस्य देवानामिव वासवः || ३-३७-१३॥

कथं नु तस्य वैदेहीं रक्षितां स्वेन तेजसा |
इच्छसे प्रसभं हर्तुं प्रभामिव विवस्वतः || ३-३७-१४॥

शरार्चिषमनाधृष्यं चापखड्गेन्धनं रणे |
रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि || ३-३७-१५॥

धनुर्व्यादितदीप्तास्यं शरार्चिषममर्षणम् |
चापबाणधरं तीक्ष्णं शत्रुसेनापहारिणम् || ३-३७-१६॥
राज्यं सुखञ्च सन्त्यज्य जीवितञ्चेष्टमात्मनः |
नात्यासादयितुं तात रामान्तकमिहार्हसि || ३-३७-१७॥

अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा |
न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने || ३-३७-१८॥

तस्य वै नरसिंहस्य सिंहोरस्कस्य भामिनी |
प्राणेभ्योऽपि प्रियतरा भार्या नित्यमनुव्रता || ३-३७-१९॥

न सा धर्षयितुं शक्या मैथिल्योजस्विनः प्रिया |
दीप्तस्येव हुताशस्य शिखा सीता सुमध्यमा || ३-३७-२०॥

किमुद्यमं व्यर्थमिमं कृत्वा ते राक्षसाधिप |
दृष्टश्चेत् त्वं रणे तेन तदन्तमुपजीवितम् || ३-३७-२१॥

जीवितं च सुखं चैव राज्यं चैव सुदुर्लभम् |
यदिच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् || ३-३७-२२॥

स सर्वैः सचिवैः सार्धं विभीषणपुरस्कृतैः |
मन्त्रयित्वा तु धर्मिष्ठैः कृत्वा निश्चयमात्मनः |

दोषाणां च गुणानां च सम्प्रधार्य बलाबलम् || ३-३७-२३॥
आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः |
हितं हि तव निश्चित्य क्षमं त्वं कर्तुमर्हसि || ३-३७-२४॥

अहं तु मन्ये तव न क्षमं रणे समागमं कोसलराजसूनुना |
इदं हि भूयः शृणु वाक्यमुत्तमं क्षमं च युक्तञ्च निशाचराधिप || ३-३७-२५॥

इत्यार्षे श्रीमद्वाल्मीकिरामायणे आदिकाव्ये अरण्यकाण्डे सप्तत्रिंशः सर्गः ।